श्रीभरतमुनिविरचितम्

# नाट्यशास्त्रम्

आचार्याभिनवगुप्तप्रणीताभिनवभारतीसहितम्

तस्य तृतीयो भागः

सम्पादको व्याख्याकारश्च

१५ पञ्चदशशतमुद्राभिः उत्तरप्रदेशसरकारद्वारा पुरस्कृतः

आचार्य मधुसूदन शास्त्री, एम्० ए०

एस-वीव, फैकल्टी आफ दि ओरियन्टल लर्निङ्ग,

सन् १९८१

काशीहिन्दूविश्वविद्यालयः

वाराणसी

# NĀTYASHĀSTRA

*of*

## BHARATMUNI

PART THIRD

ABHINAVBHARATI OF ACHARYA ABHINAV GUPTA

*Edited with an Original Profound Introduction Commentries*

*by*

ACHARYA SHRI MADHUSUDAN SHASTRI, M. A.

*Ex-Dean of the Faculty of ihe Oriental Learning,*

*Banaras Hindu University.*

1981

BANARAS HINDU UNIVERSITY

VARANASI

श्रीभरतमुनिविरचितम्

# नाट्यशास्त्रम्

तृतीयो भागः

आचार्याभिनवगुप्तप्रणीतया अभिनवभारत्या सहितम्

आचार्यमधुसूदनशास्त्रिग्रंथितया बालक्रीडा हिन्दीटीकया सनाथम्

सम्पादकः

आचार्यमधुसूदनशास्त्री, एम्०ए०

एक्स-डीन, फैकल्टी आफ दि ओरियन्टल लर्निङ्ग, का०हि०वि०वि०, वाराणसी

बी० एच्० यू० प्रेस

व्यवस्थापकेन भरतनारायणगुप्तेन मुद्रापितः

वि० सं० २०३८

## अथ प्रस्तूयते ।

नाटयशास्त्रशब्दं तदर्थञ्चाधिकृत्य अधिश्रित्य पर्यनुयुज्य कोहलादयो मात्सर्यमुत्सार्य यं मतस्य लवं न्यभान्त्सुः स सर्वो मतलवो मया विदुष्मतां समक्षं भेटितः भया कान्त्या उज्ज्वलरीत्या इटितः प्रापितः [इट किट गतौ इत्यस्यान्तर्भावितण्यर्थस्य क्तप्रत्यये रूपम्] तेन पथा प्रासीसरम् येनेदमीयं वृत्त सर्वेभ्यः आष्टमाष्टादशाध्यायीय ग्रन्थस्यास्य प्रास्ताविके भूमिकाह्वे पर्यचीचयम्। इदानीं नाट्यशास्त्रग्रन्थः कीदृश इति सम्भाल्यं वस्तु प्रचाकशीमि विविद्वद्भ्यः।

दृश्यं रूपकं रूपं नाटयमधिशय्य संदृब्धमिदं नाट्यशास्त्रं नाटकादिदशरूपकाणां श्रीगदितादिदशोपरूपकाणां स्वरूपस्य तन्निर्माणोपयोगिनां सारगर्भितानां विषयाणाञ्च प्रत्यायकः उच्चस्तरीयः प्रामाणिको ग्रन्थः। अयं स्वविषये प्रतिदिशं परिपूर्णात्मा नाटयक्षेत्रे सर्वतः प्रथमो मूर्धन्यश्चेति अखिले विश्वेऽस्मिन् कस्यामपि भाषायामेतादृशं मौलिकग्रन्थरत्नं द्वितीयं नास्तीति एकमेवाद्वितीयमिति कथितुं कथयितुञ्च पार्यत।

यतो हि आनाटयोत्पत्ति आभूमिकाविकल्पान्तं समेषां वस्तूनां यथ्यं स्वरूपं तथ्यं वैशद्येन गम्भीरतया प्रकाशकं विश्वस्य इतिहासे अप्रतिमल्लं विजोडं[1] रत्नम्।

संसारेऽस्मिन्नधुना नाटकादीनां प्रचारः प्रसारः प्रकाशः विकाशो वा यदस्ति तत्सर्वमस्यैव देनमस्ति। यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् इति तत एव सङ्गच्छते।

अस्य विविधा विलक्षणताः चिरन्तनमनीषिणां मननस्य मुख्यो विषय आसीत्। अद्यापि इमाः स्वस्मिन् स्वरूपे तादृश्यः सन्ति। भविष्यति च भविष्यन्ति। इमा इयत्य एतादृश्यश्च भावभूमयः भूयस्यः स्थिरा वर्त्तन्ति। यावान् आसां विमर्शः सम्पाद्यते तावत्य इमाः प्रस्फुटेयुः। भट्टलोल्लट भट्टनायक भट्टोद्भटाऽभिनवगुप्तादयः प्रौढा उद्भटाः मण्डितप्रान्ताः पण्डिताः अस्य शास्त्रस्य व्याख्यानानि निरमीयन्त। प्रगाढं वैदुष्यं पर्यचीचयंश्च तत्रापि निगाहं चक्षुर्ददतु [न्युपसृष्टस्य गाहू विलोडने धातोर्घञि रूपम्। निगाह्यते विलोक्यते वस्तु अनेन तन्निगाहं चक्षुः] गूढानां ग्रन्थग्रन्थीनां प्रस्फोटनमद्यावधि सावशेषमेव न; वल्किस्तेषां व्याख्यानेषु इमा अधिकं चकाशन्ते (यङ्लुकि रूपम्)।

तदेतन्नाटयं कावात् काव्यान्निष्पद्यते [पाणिनीयव्याकरणतः काव्यशब्दो न निष्पद्यते अपितु कावशब्दः। इगन्ताच्च लघुपूर्वात् ५।१।१३१। इति सूत्रादणि कवेः कर्म इति विग्रहे कावम्। काव्यन्तु त्रयी काव्यं छन्दः इति श्रुतेः छान्दसं वैदिकं रूपं न तु लौकिकं। लौकिकं तु कावमित्येव। ब्राह्मणादिषु पाठाभावेऽपि आकृतिगणं

---

[1] विगतजोडम् विगतबन्धनम् जुड बन्धने इत्यस्य पचाद्यचि रूपम्।

मत्वा कथञ्चित् ष्यञ् प्रत्ययेन निष्पन्नमिति ] इति नाटयशास्त्रस्य चतुर्थाध्याये द्विसप्तत्युत्तरद्विशततमे श्लोके अभिनवगुप्ताचार्या जगदुः।

काव्यस्यैवादः सातिशयं माहात्म्यं यत् त एव भावाः यान् प्रत्यक्षं दृष्ट्वापि पश्यो न चमत्कृतो भवति ते तद्हृदये चमत्कारं नानुभावयन्ति ये काव्यशब्दोपस्थाप्यमाना अद्भुतं चमत्कारं जनयन्ति। ये अद्भुताः चमत्कारिणः प्रतीयन्ते। यैरध्येतुः छात्रवर्गस्य अभिरुचिर्वृद्धिमियात्। अध्ययनपराङ्मुखा बालका अध्ययनोन्मुखाः भवेयुः अध्ययनप्रवृत्ताः स्युः। तदर्थं रसमयमाकर्षकं साधनं काव्यमेव। राष्ट्रस्य भाविने विकाशाय महोपयोगिनां यूनां ज्ञानपिपासा समृध्यतु। अध्ययनोत्तर मध्येतुश्चित्तपटले बहुविधविधानस्य कल्याणपरम्पराणां सरलः सरसो हेतुवर्गः समृध्नोतु तथा तेषां स्वान्ते सत्यस्य बीजं प्ररोहतु तस्मै सद्यः फलदायि कारणं काव्यम्। इतिहासे ललितकलानां प्रधानं स्थानम्। तत्र कलासीमा काव्यमिति भर्तृहर्युक्तेः कलानां सीमा अवधि काव्यम्। तेन मूढमस्तिष्कानां संफुल्लनं शिक्षणीयानां विनेयानां बालकानां मनोवृत्तेस्तत्कालं परिवर्त्तनं कर्त्तुं सुशकमेतदेव।

मानवं नवनवमुन्नेतुञ्च आन्तराः प्रेरिकाः शक्तयः कामपि शैलीमनु निरन्तरं विलासयन्ति। येन परिवर्तिनीषु स्थितिषु सतीषु अपि मानवीयाश्चेतनाः प्रमुखां भूमिकामादातुं शक्नुवन्ति।

परं मानवस्य सर्वाङ्गीणविकासोन्मुखकारिणीस्ताः पास्पर्धितुं माहतुंमसंख्या जटिलाः समस्या उपतिष्ठन्ति यासां समाधानं न केवलं मुष्किलमेव [ऊषशुषिमुष्कमधो रः इति पाणिनिसूत्रे मुष्कः शब्दस्ततः सिध्मादित्वात् इलचि सति मुष्किलशब्दो निष्पन्नो भवति] अपि तु ता मानवं विक्षिपन्ति। अवसरेऽस्मिन् सरससरसाभिर्भावभङ्गीभिः कल्याणपरम्पराणामाविर्भावकानामुपायानां गुरुवदुपदेशकम् अमृतवदाप्यायकं सञ्जीवकं बाह्या विशृंखलता दूरीकृत्य हृत्तन्त्रीनादं जागरयितुं दृश्यं काव्यमेव। मानवे नवमां प्रमां चेतयितुं तस्य कल्पनाशक्तिमुर्वरां वरीतुं विलक्षणमसाधारणञ्च मेधासमेधने योगदानमासादयितुं पूर्णं स्थिरं सद्यः परनिर्वृतिसम्बर्द्धकमनुल्लंघनीयोल्लाघदाने उत्कटं समर्थञ्च अनुष्ठानीयं काव्यमेव।

राष्ट्रसञ्जीवनीम् उद्भूतिदायिनीं समग्रतां, सफलतां, सर्जनात्मकप्रवृत्तिञ्च प्रति विशेषस्य अनुकूलिनीभिः अभिमुखीभूताभिः आत्मीयताया भावनाभिः ओतप्रोतः विशालहृदयो गुरुर्वा सुहृद्वा नान्यं काव्यमेव। उच्छृंखलस्य सर्वस्मिन् दुर्दण्डमुद्दिधीर्षोः विनयनीयस्य विद्यार्थिसार्थस्य कल्मषां बुद्धिं गङ्गामिव निर्मलां कलकलनादिनीं स्वाशयेन मधुरां प्रवाहेण निर्व्यूढां विधत्ते यत् तद् रूपकमेव। यतो हि सर्वः सुखं समीहते। सौन्दर्यं निरीक्षते। भावं बिभर्त्ति। रसास्वादने लोलुपः लालसस्तिष्ठति। तत्परतया परमानन्दं विन्दति। एतादृशं युववर्गमध्ययनेऽभिमुखं विधातुं नागरिकाणां स्तरमुन्नेतुं शास्त्रीयवास्तविकरहस्येषु प्रीणासु तथ्यकथासु च सम्मुखीकर्त्तुं जागरणस्य दिशामुद्बोधयितुं प्रकाशविकाशछविं दर्शयितुं गभीरान् विषमाँश्च विषयान् आस्वादनीयतया लघु प्रस्तोतुं महत्त्वाकांक्षां समुद्बोद्धुं प्रभुः विभुः

शम्भुः कालिदासादिमहाकवीनां पञ्चषाणामेव दृश्यं श्रव्यं पठ्यं काव्यमेव। यत्र मधुरं कलकलञ्च नदन्ती रसगङ्गा वहति यस्या जलमाचम्य आस्वाद्य आप्लाव्य मूढा विक्षिप्ताः सन्दिग्धा भ्रान्ता युवानो विदुष्मन्तः चेतनाशालिनः वादविवादयोः प्रगल्भा निर्णेतारः प्रामाणिका विश्वसनीया सम्भ्रान्ताश्च नागरिका जायन्ते। तानि इमानि रसप्रधानानि काव्यानि तेभ्यो हि रसप्रतीतिः स्थायिविभावानुभावव्यभिचारिभिर्भावैर्भवति। एतद्रसप्रत्यायकविभावादेरुपस्थापकानां शैली बहुभेदं बिभ्राणा विराजते। सा चेयं नवविधापि अनेकतां गाहते। तत्र प्रथमा शैली सार्थकनिरर्थक शब्दरूपं रागरागिणी प्रधानं श्रव्यं काव्यम्। द्वितीया शब्दप्रतिपाद्यार्थ शुद्धार्थरूपमभिनेयप्रधानं दृश्यमभिनयात्मकं काव्यम्। तृतीया शब्दसहकृतवर्ण्यमानार्थसम्पन्नं गद्यात्मकं कादम्बर्यादि, पद्यात्मकं रघुवंशादि, गद्यपद्योभयात्मकं नलचम्पू प्रभृति पठ्यं काव्यम्। चतुर्थी शब्दशून्यं केवलभावमयार्थरूपं विलक्षणरेखाभिः सम्पन्नं चित्रं काव्यश्रेणीबहिर्भूतम्। पञ्चमी लिपिस्वरूपं रेखानुगतं सार्थकशब्द प्रधानं चित्रं खड्गबन्धमुरजबन्धादि काव्यम्। षष्ठी उत्कीर्णनप्रधाना। सप्तमी टंकणप्रधाना। अष्टमी स्थापत्यप्रधाना। नवमी स्थाप्या। एषु द्वितीयां शैलीमनुरुध्य नाट्यशास्त्रे प्रपञ्चितं दशरूपकविधानं तदिहास्माभिरस्य तृतीयभागस्य पर्यन्ते संकेतितं विद्योतते। ह्यग्निबिन्दुनेत्रतमवर्षस्य आफाल्गुनम् वस्वग्निबिन्दुनेत्रतमवर्षस्य आचैत्रं चक्षुः पीडया विकलः किमपि द्रष्टुमहं नापारयम्। अतः प्रूफस्य अध्ययनाय तत्संस्कर्त्तुञ्च न प्राभवम्। तेन मदीयः पञ्चमः पुत्रः चिरञ्जीवी चन्द्रोदयः बी० ए० एव सर्वमकरोत्ततश्च या अशुद्धयो ग्रन्थेऽस्मिन् संजातास्तदर्थं प्रार्थये पाठकान् विदुष्मतो विद्यार्थिनश्च। क्षन्तव्योऽहं देशनीयो दयनीयो वराकः।

हिन्दूविश्वविद्यालयीयमुद्रणालयस्य व्यवस्थापको मैनेजरपदाभिधेयो भरतनारायणगुप्तो नितान्तं सोल्लासं सोल्लाघं शुभाशिषा संवर्द्धनीयः। धन्यताश्रियो धामायं विराजतां सुखमयसमृद्ध्या। अथ च एतस्मिन् प्रकाशने योगदानेनास्मच्छिष्यकल्पो जोखूरामसिंहः कमला सिंहश्च वारं २ सहर्षं धन्यावादार्हः स्मरणीयश्चिरम्।

विदुषामाश्रवोऽयम्
आचार्य मधुसूदनशास्त्री
एक्स डीन०, फकल्टी आफ दि ओरियण्टल लर्निङ्ग
का० हि० वि० वि०
भदैनी वाराणसी।

७।११।८१
गीताजयन्ती।

## अभिनवभारत्यां स्मृता ग्रन्था ग्रन्थकर्त्तारश्च

अभिनवगुप्तश्लोकः
अभिसारिकाबञ्चितकम्
ईश्वरकृष्णः
उद्भटः
उणादिः
उपाध्यायः
कर्पूरमञ्जरी
कामन्दकम्
कुमारसम्भवः
कृत्यारावणम्
कोहलः
गुणाढ्यः
चन्द्रकः
टीकाकारः
तापसवत्सराजम्
तोतः
दरिद्रचारुदत्तम्
नागानन्दम्
प्रतिमानिरुद्धम्
विन्दुसारः
बृहत्कथा
बेज्जलः
भगवद्गीता
मायापुष्पकम्
मुद्राराक्षसम्
रत्नावली
राजशेखरः
राधाविप्रलम्भः
रामाभ्युदयम्
रामायणम्
राहुलः
लोल्लटः
वाक्यपदीयम्
वासवदत्तानाट्यधारा
विक्रमोर्वशी
विन्ध्यवासी
विशाखदेव
वेणीसंहारः
शङ्कुकः
शाकुन्तलम्
सहृदयालोकः
सुबन्धुः
हर्षचरितम्

# विषयसूची

## एकोनविंशोऽध्यायः

## विंशोऽध्यायः

## एकविंशोऽध्यायः

---

## द्वाविंशोऽध्यायः

## त्रयोविंशोऽध्यायः

## चतुर्विंशोऽध्यायः

श्रीरस्तु

श्रीगणपतये नमः

# नाट्यशास्त्रम्

## एकोनविंशोऽध्यायः

### अभिनवभारती

देहे ससन्ध्यङ्गगणे समस्ते यत्स्थापनं स्पर्शनवृत्तिकारि ।
तदिन्द्रियं यस्य वपुर्नमामि तमान्तरस्पर्शमयं महेशम् ।१७।

### मधुसूदनी

देहे इति । सन्धिभिः पर्वभिःसहितानि अङ्गानि करचरणादीनीति ससन्ध्यङ्गानि तेषां गणः समूहो यत्रास्तीति । अर्श आद्यच् । तस्मिन् ससन्ध्यङ्गगणयुक्ते समस्ते देहे शरीरे यत् स्पर्शनाख्यायाः वृत्तेश्चेष्टायाः कारि सम्पादकं स्थापनं सत्त्वं तत्त्वगिन्द्रियं यस्य भगवतो नटराजस्य वपुः तं महेशम् नमामि । महेशस्य सम्मुखे प्रह्वीभवामि । कथम्भूतं महेशम् आन्तरस्पर्शमयं आन्तरात् स्पर्शात् आगतम् आज्ञातम् । गत्यर्थानां ज्ञानार्थकत्वात् । तत आगत इति मयट् । योगबलेन आन्तरे स्पर्शसम्बसधे सत्येव महेशस्य ज्ञानं भवितुमर्हति नान्यथेति बोधरहस्यम् । इति बाह्यम् व्याख्यानम् । षट्त्रिंशत्तत्त्वात्मकः शिवः प्रथमादिषट्त्रिंशात्मकेऽध्याये वन्दितः । ततः त्वगात्मकतत्त्वरूपः सोऽत्र एकोनविंशेऽध्याये वन्दितः ।

आन्तरन्तु—सन्धिभिः मुखादिपञ्चसन्धिभिः । अङ्गानि चतुषष्टिसंख्याकानि उपक्षेपादीनि । समस्ते इतस्ततः सन्धिषु तदुङ्गेषु च सम्यक् क्षिप्ते विन्यस्ते । शरीरे इतिवृत्ते नटनीये कथानके । स्पर्शनात्मिकां वृत्तिं कैशिकीं वा सात्वतीं वा करोतीति विग्रहः । समासस्तु षष्ठचन्तघटितस्यैव । वृत्तेः कारि इति । स्थापनमभिनयनम् । अन्यत्समं समम् ।

### बालक्रीड़ा

देहे । सन्धियों के सहित यानी बीच बीच में जोड़ से युक्त जो करचरणादि अङ्गगण, अवयव समूह है उनसे युक्त सम्पूर्ण शरीर में जो स्पर्शनवृत्तिकारी स्थापन है अर्थात् स्पर्शनकारी चेष्टाओं की विधायक स्थिति है सत्ता है वह त्वगिन्द्रिय जिसका शरीर है उस महेश को मैं अभिनवगुप्त प्रणाम करता हूं जो आन्तरस्पर्श से प्राप्त होता है योग की प्रक्रिया समाधि से स्पर्श करने पर मिलता है यह बाह्य अर्थ है । यहां ना० शा० के ३६ अध्यायों में ३६ तत्त्वात्मक शिव की बन्दना की है तदनुसार यहां १९ वें अध्याय में त्वगिन्द्रिय तत्त्व का वन्दन है ।

नाटकादि की रचना में अपेक्षित इतिवृत्त कथाभाग जो किसी मुख्य प्रयोजन से सम्बद्ध है उसका जो अवान्तर प्रयोजनों से सम्बन्ध है उसे सन्धि कहते हैं । वे मुख प्रतिमुख नाम वाली पांच संधियां हैं । इन सन्धियों एवं इनके उपक्षेप परिकर आदि चतुषष्टि

**इतिवृत्तं तु नाट्यस्य शरीरं परिकीर्तितम् ।**
**पञ्चभिः सन्धिभिस्तस्य विभागः संप्रकल्पितः ॥१॥**

अभिनवभारती

"पुनरस्य शरीरविधानसन्धिविधिलक्षणं वक्ष्ये" इत्यनेन (१८-१२७) शरीरमितिवृत्तात्मकं विधानं च तस्य विधानरूपप्रकारात्मकं, सन्धयश्च मुखादयो, विधयश्च सन्ध्यङ्गस्वभावा लक्षणीयत्वेन प्रतिज्ञाता, तत्र शरीरमादौ लक्षयितव्यमिति दर्शयति इतिवृत्तं त्विति । तुशब्दो व्यतिरेके—काव्यमात्रस्यानभिनेयस्याभिनेयस्य तावद् वृत्तमात्रं शरीरं, नटनीयस्य त्वभिनेयरूपस्य इति एवंप्रकारतया यदुपस्कृतं वृत्तं, अत एवेतिवृत्तशब्दवाच्यं तद्वस्तु शरीरं रसः पुनरात्मा शरीराविर्भावकः, अत एवार्थनिर्मापकत्वात् अर्थतादात्म्यात् अर्थरूपताध्यासात् अर्थैकज्ञाननिवेशितत्वात् अर्थो-

मधुसूदनी

पुनरस्य शरीरविधानसन्धिविधिलक्षणं वक्ष्ये इत्यनेन संकेतितम् । प्रकारात्मकम् प्रभेदात्मकम् । प्रकारो भेदसादृश्ये इत्यमरः । विधानम् विधानरूपम् बिधानमिति पुनः श्रुत्यर्थकं नाङ्कनीयम् । नटनीयवस्तुनः विशेषेण धानम् पोषकं तद्रूपं विधानमनुष्ठानम् । विधयः सन्धीनामङ्गानाञ्च स्वो भावा स्वकीयाः क्रियाः । रसः पुनः विशेषः आत्मा । पुनरप्रथमे विशेषे चेति गणरत्नकोषः । शरीराविर्भावकः काव्येतिवृत्तसमर्पक अत एव वागात्मनां शब्दानाम् । इतिवृत्तैकार्थयोगक्षेमत्वम् । इतिवृत्तेन सह एकस्मिन्नर्थे काव्ये अभिनेये दृश्ये, अनभिनेये पठ्ये

बालक्रीड़ा

(मूल) अथ अब नाट्यशास्त्र की उन्नसीवें अध्याय की बालक्रीड़ा का आरम्भ करते हैं। इति वृत्त को नट्य का शरीर कहा है। पाँच सन्धियों से उसके विभाग की कल्पना की है ॥ ११ ॥

अङ्गगण इससे सम्पन्न सम्पूर्ण शरीर में इतिवृत में स्पर्शनरूप कथाभागोत्तेजनात्मक वृत्तियों को कैशिकी सात्वती आदि नाम से प्रसिद्ध वृत्तियों को करने वाला जो स्थापन है विधायक है ऐसी इन्द्रियां जिसका शरीर है उस महेश को मैं प्रणाम करता हूं। बाकी सब पूर्ववत् है। यह आन्तर अर्थ है।

पुनरस्य शरीर विधान सन्धि विधिलक्षणं वक्ष्ये इस अट्ठारहवें अध्याय के अन्तिम श्लोक के उत्तरार्ध में कथित अंश से इतिवृत्तात्मक शरीर और उसके विधानरूप पोषकरूप प्रकारात्मक भेदस्वरूप विधान माने अनुष्ठान और सन्धियां मुखादि तथा विधियां माने सन्ध्यङ्गस्वभाव ये लक्षणीय हैं ऐसी जो प्रतिज्ञा की थी उसमें पहले शरीर का लक्षण करना है उसको दिखाते हैं। इतिवृत्तं तु। यहाँ तु शब्द का अर्थ व्यतिरेक है। काव्यमात्र का--चाहे वह अभिनेय है अथवा अनभिनेय हैं—शरीर सभी वृत्त हैं। किन्तु जो नटनीय है अभिनेय है उसका इति माने इस प्रकार से उपस्कृत जो वृत्त है अत एव जो इतिवृत्त शब्द

## अभिनवभारती

रञ्जनकत्वात् अर्थनिमित्तत्वाद्वा, इतिवृत्तार्थैकयोगक्षेमत्वं त्वागामनां शब्दानामिति। तदाशयेन—

वाचि यत्नस्तु कर्तव्यो नाट्यस्यैषा तनुः स्मृता। (१४-२)

इति पूर्वमुक्तम्, इह वृत्तं शरीरमिति दर्शितमित्यविरोधः। स तु कथं प्रकारवैचित्र्य इत्याशंक्याह पञ्चभिः सन्धिभिरिति। एतदुक्तं भवति—प्रकारवैचित्र्यकल्पनामया एव सन्धयः। तत्र पारम्यपरतया (पारम्पर्यतया) पञ्चसङ्ख्येति, तेन हीनसन्धित्वेऽपि न कश्चिदत्र विरोधः।

## मधुसूदनी

श्रव्ये, लित्ये खड्गमुरजबन्धात्मना लिपिस्वरूपे अर्थात् चित्र्ये योगक्षेमत्वम्। तादृशयोगक्षेमत्वे हेतुमाह—अर्थनिर्मापकत्वम् प्रत्यर्थं हि शब्दाभिनिवेशः। कुतस्तन्निवेशः गौरिति पृष्टे गौरिति शब्दः अभिनिवेश्यते अर्थेन सह शब्दस्य तादात्म्यात्। ननु तथात्वे तु अग्निरित्युच्चारणे ज्वलनं जिह्वायाः स्यादित्याह—अर्थरूपताया अध्यासात् आरोपात्। तत्वारोपोऽपि कथमित्याह—एकस्मिन् ज्ञाने निवेशितत्वात् समानवित्तिवेद्यत्वात्। ननु शब्दादर्थस्य ज्ञानम्, क्रियाभेदाय कालः स्यादिति शब्दार्थज्ञानयो पूर्वोत्तरकालभेदात्समानत्वम् एकत्वं कुत इत्याह—अर्थस्य उपरञ्जकत्वाद् उपरञ्जनकारित्वात्। ननूपपरञ्जनमपि कथमित्याह—अर्थस्य निमित्तत्वात् बीजत्वात्।

## बालक्रीड़ा

से वाच्य है कथनीय है वह वस्तु शरीर है और रस जिसमें पुनः माने विशेषरूप से आत्मा है यानी शरीर का आविर्भावक है। यहाँ का आशय यह है कि शरीर से ही भोग होता है क्योंकि भोग का आयतन शरीर है और भोग को करने वाला आत्मा है अतः आत्मा के भोग के लिए शरीर का आविर्भाव किया जाता है अतः कहाकि रस शरीराविर्भावक आत्मा है।

इसीलिए वाणीरूप शब्द का इतिवृत्त के साथ काव्यरूप एक अर्थ में योगक्षेम है। क्योंकि प्रत्यर्थं हि शब्दाभिनिवेशः के अनुसार शब्द अर्थ का निर्मापक है अभिनिवेश करने वाला है अर्थात् उपस्थापक है। वह शब्द अर्थ का उपस्थापक भी तभी होता है जब कि इसका अर्थ के साथ तादात्म्य है। क्योंकि प्राश्निक किसी वस्तु के विषय में पूछता है कि यह क्या है? उत्तरदाता उसके उत्तर में शब्द बोलता है। जैसे सामने गौ खड़ी है उसके बारे में कोई प्रश्न करता है कि यह क्या है? उत्तरदाता कहता है कि यह गौ है। इससे सिद्ध होता है कि शब्द और अर्थ का तादात्म्य है।

इस पर प्रश्न होता है कि यदि तादात्म्य है तब अग्नि के उच्चारण करने पर मुह को जल जाना चाहिए। उत्तर—तादात्म्य वास्तविक नहीं है उसका अध्यास होता है अर्थात् आरोप किया जाता है। प्रश्न—अच्छा यह बतलाइये कि इस अरोप का मूल क्या है।

## अभिनवभारती

अन्ये तु सर्वत्र पञ्चैव सन्धयः, अपूर्णाङ्गत्वात्तु कस्यचिद्रूपकस्य हीनसन्धित्वमुच्यत इत्याहुः। एतच्च स्वस्थाने वितनिष्यामः।

एवमितिवृत्तशब्दे इतिभागस्य योऽर्थः सोऽप्रसिद्ध इति कृत्वा द्वितीयार्धेन पञ्चभिरित्यादिना व्याख्यातः, न तु सन्धिनिरूपणमेतत्तत्तु उद्देशक्रमेण तस्य अनेकविधत्वात् ॥१॥

## मधुसूदनी

अविरोध इति। पूर्वं चतुर्दशेऽध्याये शब्दस्य अधुनैकोनविंशेऽध्याये इति वृत्तस्यार्थस्य नाट्यतनुत्वेऽपि एतैः षड्भिर्हेतुभिः विरोधः परिहृत इत्यर्थः। ननु प्रकारात् वैचित्र्यमिति प्रकारहेतुकवैचित्र्यसद्भावे कथं सोऽविरोध इत्याशंकाया माह-पञ्चभिरिति। पारम्यपरतयेति। परमस्य भावः पारम्यम्। काव्ये हि कल्पनापरमत्वं कल्पनयैव परा उत्कृष्टा मा शोभा सञ्जायते। इति रहस्यम्। स्वस्थाने सन्धीनां निरूपणावसरे ॥१॥

## बालक्रीड़ा

उत्तर : इसका मूल है ये शब्द और अर्थ एक ज्ञान में निवेशित हैं यानी एक ज्ञान के विषय होते हैं। प्रश्न—ऐसा कैसे ? उत्तर—शब्द अर्थ का उपरञ्जक है यानी अर्थ शब्द से उपरक्त है क्योंकि शब्द अर्थ का निमित्त है, वीज है। इसी आशय से शब्द और अर्थ का अभेद है। इसी से कहा है कि—

शब्द के विषय में यत्न करना चाहिए यह शब्द ही नाट्य का शरीर है। पहले शब्द को नाट्य का शरीर कहा अब वृत्त को अर्थ को नाट्य का शरीर कहते हैं इस में अविरोध कथन उनमें अभेद होने से होता है।

प्रश्न—जब कि उनमें प्रकार वैचित्र्य है तब इनमें भेद होना स्वतः प्राप्त है ऐसी स्थिति में अविरोध कैसे ? ऐसी आशंका में उत्तर देते हैं—पाँच संधियों से यह युक्त है। इससे यह कहते हैं कि प्रकार के वैचिश्य की कल्पना ही सन्धियाँ हैं। यानी वस्तुतः एक हैं भेद उनमें काल्पनिक है। क्योंकि नाटकादि में पर उत्कृष्ट मा शोभा ही अपेक्षित है इसलिए वे पारम्य के पर हैं यानी अधीन हैं और वह पारम्य उत्कृष्ट सौन्दर्य पाँच संख्यावाली संधियों से होता है। कभी २ वह शोभा पांच संधियों से कम संधियों के होने पर भी होती है इसलिए इसमें कोई विरोध नहीं है।

अन्य लोग तो कहते हैं कि सभी नाटकादि में पाँच ही संधियाँ होती हैं। किन्तु जब किसी रूपक के अङ्ग पूर्ण नहीं होते हैं तब उस रूपक को हीन सन्धि कहते हैं। इसका विवेचन सन्धियों के निरूपण के प्रसङ्ग में करेंगे।

इस प्रकार इतिवृत्त शब्द में 'इति' इस भाग का जो अर्थ है वह अप्रसिद्ध है इसलिए पञ्चभिः इस द्वितीयार्ध से उसकी व्याख्या कर दी है किन्तु यह सन्धियों का निरूपण नहीं हैं। उसका निरूपण तो उद्देश के क्रम से करेंगे। वे अनेक प्रकार की हैं ॥१॥

**इतिवृत्तं द्विधा चैव बुधस्तु परिकल्पयेत् ।**
**आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरम् ॥२॥**

अभिनवभारती

एवं शरीरमभिधाय तस्य विधानशब्देनोद्दिष्टं प्रकारवैचित्र्यं दर्शयति—इतिवृतं द्विधा चैवेति । इतिवृत्तं स्थितं सत्, बुधो विवेचकः कविर्द्विधैव परिकल्पयेत् । चकारात् प्रकारणादावितिवृत्त च कल्पयेत् । तच्च द्विधा । एकमपरमित्यनेनेदमाह—न निसर्गतः किञ्चिदाधिकारिकम्, अन्यद्वा । कविधिया यदेतदाधिकारकं कृतं तदापरस्य प्रासङ्गिकतास्तीति द्विधाशब्देन सूचितं, तदेवेदं दर्शितम् । "अधिकरण-विचाले च" ( पा० ५-३-४३ ) इति धाप्रत्ययः । एकं राशिं द्विधा कुरु इति यथा; तेनैकमेवेतिवृत्त द्विशाखमिति यावत् ॥२॥

मधुसूदनी

कविधियेति । कविः स्वस्य धिया धारणारूपया कस्यापि इतिवृत्तस्य आधिकारिकत्वमुद्भावयति अतस्तदाधिकारिकं न तु निसर्गतः इति सारम् । यदा एकस्य तथात्वं तदापरस्य प्रासंगिकत्वमर्थात् प्राप्तम् । ननु कुत एवमभिप्रैति भवानित्याह—द्विधेत्यनेन अर्थात् द्विशब्दाज्जायमानेन धाप्रत्ययेन एतत् प्राप्तम् । अयं भावः । अधिकरणविचाले च इति पाणिनेः सूत्रम् । तस्यार्थः—अधिकरणं द्रव्यम् । विचालः विचलनमन्यथा करणम् संख्यान्तरापादनम् । संख्यान्तरापादनं हि एकस्य अनेकीकरणम् एकं राशिं द्विधा कुरु इति, अथवा अनेकस्य एकीकरणम् अनेकम् एकधा कुरु इति । एवमत्र एकमितिवृत्तं द्विधा द्विशाखं वृत्तमित्यर्थः ॥२॥

मधुसूदनी

( मूल ) इतिवृत्त दो प्रकार का है ऐसी बुधों को कल्पना करनी चाहिए । उनमें एक आधिकारिक है दूसरा प्रासङ्िक है ॥२॥

इस प्रकार शरीर को कह कर अब उसके विधान शब्द में उद्दिष्ट प्रकार वैचित्र्य को दिखाते हैं इतिवृत्ति दो प्रकार का है । बुध माने विवेचना करने वाला कवि सद्रूप से स्थित प्रसिद्ध इतिवृत्त की दो प्रकार से कल्पना करे । द्विधा चैव में कहे हुए चकार से प्रकरणादि में भी इतिवृत्त की कल्पना करनी चाहिए । वह भी दो प्रकार का है । एकम् शब्द और अपरम् शब्द इनसे यह कहा कि स्वभाव से कोई इतिवृत्त आधिकारिक नहीं होता है अथवा अन्य होता है । किन्तु कवि अपनी धारणा से जिसको यह आधिकारिक है ऐसा जब कह देता है या कर देता है तब उससे अपर दूसरा इतिवृत्त अर्थात् प्रासङ्गिक कहलाता है इस बात को द्विधा शब्द ने सूचित किया उसी को यहाँ दिखा दिया है । वहाँ द्विधा शब्द में अधिकरण विचाले च इस पाणिनि सूत्र से धा प्रत्यय हुआ है अतः जैसे एक राशि को द्विधा करो ऐसा कहा जाता है वैसे ही इस तरह एक ही इतिवृत्त की दो शाखायें हैं ॥ २ ॥

**यत्कार्यं हि फलप्राप्त्या सामर्थ्यात्परिकल्प्यते ।**
**तदाधिकारिकं ज्ञेयमन्यत्प्रासङ्गिकं विदुः ।।३।।**

अभिनवभारती

तत्प्रकारद्वयं क्रमेण दर्शयति यत्कार्यं हीति। प्रधानत्वेन सम्पाद्ये फले यो ज्ञानेच्छाप्रयत्नक्रियालक्षण आरम्भः तत्कार्यमिति यथा वक्ष्यते 'यदाधिकारिकं वस्तु' (१९-२६) इति, तथाभूतो य आरम्भो मुख्यफलप्राप्त्या परिकल्प्यते तद् आधिकारिकमितिवृत्तम्। हि यस्माम् तथैव ज्ञेयम्। निरुक्तेनाधिकारः सर्वत्रनुयायि (त्वं ?) हृदयानुयायि (त्वं ?) प्रयोजनमस्य। प्रासङ्गिकेऽपि हि तदन्तर्लीनमेव। तथाहि आधिकारिके फलाप्ते आचिख्यासाधनैषाफलजिहिर्षानिष्पत्तौ यथा न शक्यत्यन्तरव्यापारणं, तद्वत्प्रासङ्गिकेऽपि सर्वत्र शक्त्यन्तरव्यापाराभाव एव। शक्त्यन्तरेऽपि पृथग्व्यापार्यमाणे तस्याप्याधिकारिकत्वमेव स्यात्। प्रतिज्ञानिर्वहणं जगत्कण्टकरावणोद्धरणं शरणागतविभीषणरक्षणमित्याद्यपि हि प्रधानफले सीताप्रत्यानयनलक्षणे विवक्षिते न शक्त्यन्तरव्यापारसाध्यं, अपि तु तदुपयोगिसामाद्युपायचतुष्टयतद्द्विकत्रिकादिभेदसम्पादननान्तरीयकोपनीतमेव। तापसवत्सराजे राज्यप्रत्यापत्तेः प्रधानफलत्वे वासव-

बालक्रीड़ा

(मूल) फल प्राप्ति के अनुरोध से जिसकी कार्य के रूप में अथवा कर्त्तव्य के रूप में कल्पना की जाती है उसको आधिकारिक समझना चाहिए और इससे अतिरिक्त को प्रासङ्गिक समझें ।।३।।

अब उन दो प्रकारों को क्रम से दिखाते हैं यत्कार्यं हि। प्रधान रूप से सम्पाद्य फल का जो ज्ञान इच्छा बाह्य क्रिया रूप एवं आन्तर प्रयत्न रूप आरम्भ है वह कार्य है। जैसा कि आगे १९ अं० २६ श्लो० में कहेंगे कि जो आधिकारिक वस्तु है। उन ज्ञानेच्छा प्रयत्न और क्रियारूप आरम्भ की जो मुख्य फल प्राप्ति से परिकल्पना करते हैं वह आधिकारिक इतिवृत्त है। क्योंकि ऐसा ही इसे समझना चाहिए।

इस उपर्युक्त निर्वचन से यह सिद्ध हुआ कि अधिकार वह है जिसका प्रयोजन सभी जगहों में अनुस्यूत वो सभी के हृदयों में अनुगत होता हो। प्रासङ्गिक इतिवृत्त में भी वह प्रयोजन अन्तर्लीन है अन्तर्निहित है। आधिकारिक इतिवृत्त में जैसे फल के प्राप्त होने से आचिख्यासा आधिकारिक के कहने की इच्छा, साधनैषा लोकैषणा एवं फलजिहीर्षा माने फल के संहार करने की इच्छा इन सबकी निष्पत्ति यानी समाप्ति के होने पर शक्त्यन्तर का क्रियान्तर का व्यापारण नहीं होता है उसी तरह प्रासङ्गिक में भी शक्त्यन्तर के क्रियान्तर के व्यापारण का अभाव ही है। क्योंकि शक्त्यन्तर यदि पृथक् व्यापार्यमाण होगा तो वह भी आधिकारिक हो जायेगा। किन्तु सिद्धान्त है प्रधानरूप से विवक्षित फल है सीता को दुश्मन के घर से लौटा लेना। जिसमें उस लौटा लेने के लिए किये जानेवाले व्यापार से ही प्रतिज्ञा का निर्वाह और जगत् के कण्टक रावण का उद्धार और शरण में आने वाले विभीषण का रक्षण आदि अवान्तर फल भी सिद्ध हो जाते हैं अतः उनको सिद्ध करने के लिए शक्त्यन्तर के व्यापार की आवश्यकता नहीं है।

**कारणात्फलयोगस्य वृत्तं स्यादाधिकारिकम् ।**
**तस्योपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम् ।।४।।**

अभिनवभारती

दत्तासङ्गमपद्मावतोप्राप्त्यादौ क्रियान्तरानुपयोग एव मन्तव्यः । यदि ह्यस्य वासवदत्ताप्राप्त्युपायत्वं पद्मावतीपरिणयस्य नोच्येत न वत्सराजस्तत्र प्रवर्तेत, तदप्रवृत्तौ कुतः प्रधानफलमिति सर्वप्रासङ्गिकमेकरूपमेव । प्रसक्तिर्हि प्रसङ्गः तत आगतं प्रासङ्गिकं प्रसज्यते वा प्रधानफलनिष्पत्तये इति प्रसङ्गस्तत आगतमिति । तेन शक्त्यन्तरयोगायोगाभ्यां च यत्प्रासङ्गिकस्यानेकविधत्वं टीकाकृद्भिरभ्यधायि न तदुपाध्यायाः संमल्यन्ते ।।३।।

अत एवाह कारणात्फलयोगस्येति । अयमर्थः—आधिकारिकं नाम अधिकारः यस्त्वितिवृत्तं फलसम्बन्धं करोति स कविना वर्णनोपायारोहमानीतः तत्समर्थाचरणेन प्रयुज्यते । एवमन्यत्स्यादितिवृत्तमिति पूर्वपक्षमाशंक्य तत्रोत्तरमवान्तरेणाह तस्योपकरणार्थं त्विति । हिरप्यर्थे भिन्नक्रमः अनुषङ्गिकमपि कीर्त्यत इति ।।४।।

बालक्रीड़ा

(मूल) मुख्य फल के योग में जो कारण है अर्थात् फल की प्राप्ति में जो हेतु बनता है वह वृत्तआधिकारिक है। और जिसको उसके उपकरण के लिए कहते है वह वृत्त आनुषङ्गिक है ।। ४ ।।

अपितु मुख्य फल के उपयोगी सामादि चार उपायों में से किसी एक दो या तीन का सम्पादन जो नान्तरीयकतया उपनीत हो जाता है यानी अवश्य ही प्राप्त हो जाता है उसके लिए शक्त्यन्तर की जरूरत है।

जैसे तापसवत्सराज नाटक में राज्य का प्रत्यानयन ही मुख्य फल है अतः वहाँ वासवदत्ता के साथ सङ्गम एवं पद्मावती की प्राप्ति आदि में क्रियान्तर का अनुपयोग ही माननीय है।

यदि पद्मावती परिणय को वासवदत्ता की प्राप्ति में उपाय है ऐसा नहीं कहेंगे तो वत्सराज की उधर प्रवृत्ति ही नही होगी और प्रवृत्ति के नही होंने पर प्रधान फल राज्य की प्राप्ति कैसे होगी। इस तरह सभी प्रासङ्गिक इतिवृत को एक रूप ही समझना चाहिए। प्रसक्ति का नाम प्रसङ्ग है उससे प्राप्त होने वाला प्रासङ्गिक है। अथवा प्रधान फल की निष्पत्ति के लिए की जाने वाली प्रसक्ति का नाम प्रगङ्ग है उससे प्राप्त होने वाला प्रासङ्गिक है। इसलिए टीकाकारों ने जो शक्त्यन्तर के योग एवं अयोग के कारण प्रासङ्गिक को अनेक प्रकार का कहा है उस को उपाध्यायजी नही मानते हैं ।।३।।

इसी लिए कहते हैं कि कारणात् फल योगस्य। इसका अर्थ यह है कि आधिकारिक वह इतिवृत्त है जो फल के साथ सम्बन्ध करता है जिसको कवि ने वर्णन रूपी उपाय पर आरूढ किया है यानी पहुंचाया है और आरूढ होने के योग्य आचरणों के कारण प्रयुक्त किया है। इसी प्रकार आधिकारिक इतिवृत्त से अन्य भी इतिवृत्त है। ऐसे पूर्वपक्ष की आशङ्का करके उस विषय में उत्तर को अवान्तर तरीके से कहते हैं—उसके उपकरण के लिए तो। यहां तु का अपि के अर्थ में प्रयोग किया है और इसका क्रम स्थान भिन्न है

**कवेः प्रयत्नान्नेतृ़णां युक्तानां विध्यपाश्रयात् ।**
**कल्प्यते हि फलप्राप्तिः समुत्कर्षात्फलल्य च ॥५॥**

अभिनवभारती

ननु फलप्राप्तिलक्षणेन प्रयोजनेन सप्रयोजनत्वमाधिकारिकस्य लक्षणमुक्तम् फलप्राप्तिश्च प्रासङ्गिकेऽप्यस्ति सा प्रासङ्गिकीति चेत्, सिद्धे प्रासङ्गिकस्याधिकारिकाद् भेदे भवेदेतत्, तत एव तत्सिद्धौ चक्रकान्योन्याश्रयदोषः, तस्मात्फलप्राप्तिरेव विशिष्य वक्तव्येत्यभिप्रायेणाह कवेः प्रयत्नान्नेतृ़णां युक्तानामिति । समुत्कर्षं प्राधान्यमवलम्ब्य फलप्राप्तिः कल्प्यते, प्रधानफलप्राप्तिप्रयोजनमाधिकारिकमित्यर्थः ।

ननु फलप्राप्तेः कथं प्राधान्यमाधिकारिकं, निर्वर्त्यत्वादिति चेत्तर्हि स एव दोष इत्याशङ्क्याह कवेः प्रयत्नादिति । कविर्यत्फलमुत्कर्षेण विवक्षति तत्प्रधानफलम् । ननु पुरुषेच्छा यद्यनियन्त्रिता, तदा पुनरपि स एव दोषः प्रयत्नादित्याह । नेतृ़णां

बालक्रीड़ा

(मूल) कवि के प्रयत्न से की गई विधि के आश्रय के कारण फल के बीज के समुत्कर्ष से नाट्य के इतिवृत्त के युक्त अनुरूप नायक एवं नायिकाओं को फल के प्राप्ति की कल्पना होती है । यहाँ 'फल' फले धने बीजे' इस कोष के आधार पर फलशब्द का बीज अर्थ किया गया है । निमित्तकारण को भी बीज कहते हैं ॥५॥

अर्थात् उपकरणार्थ पद के साथ इसका अन्वय नहीं है इसका अन्वय आनुषङ्गिक के साथ है । अतः आधिकारिक इतिवृत्त की सहायता के लिए उपोद्वलन के लिए आनुषङ्गिक का भी कथन किया जाता है ॥४॥

प्रश्न—फलप्राप्ति रूप प्रयोजन से जो सप्रयोजन है यानी प्रयोजन वाला है वह आधिकारिक है ऐसा आधिकारिक लक्षण का सप्रयोजनत्व बतलाया किन्तु वह फलप्राप्ति प्रासङ्गिक में भी होती है । जो प्राप्ति प्रासङ्गिकी है । यह फलप्राप्ति आधिकारिकी है और यह प्रासङ्गिकी है यह तभी हो सकता है जब आधिकारिक से प्रासङ्गिक का भेद सिद्ध हो जाय । क्योंकि यदि उन फलप्राप्तियों से ही उनके भेद की सिद्धि होगी तो चक्रक या अन्योन्याश्रय दोष हो जायगा । इसलिए फलप्राप्ति को विशेष रूप से कहना चाहिए इस अभिप्राय से कहते हैं कि कवि के प्रयत्न से निश्चित किये गये नेताओं के उत्कर्ष का प्राधान्य का अवलम्बन करके फलप्राप्ति की कल्पना करते हैं अतः प्रधान फल की प्राप्ति रूप प्रयोजन आधिकारिक है । ऐसा इसका अर्थ है ।

प्रश्न—फलप्राप्ति को आधिकारिक प्राधान्य कैसे होगा क्योंकि फल संम्पाद्य होता है निर्वर्त्य होता है । और जो निर्वर्त्य होता है वह सापेक्ष होता है । उसमें यदि वे परस्पर सापेक्ष हुए तो अन्योन्याश्रय दोष होगा और पृथक् २ सापेक्ष हुए तो चक्रक दोष होगा । इस आशंका का शमन करने के लिए उत्तर देते हैं कि कवि के प्रयत्न से यानी कवि जिस फल को उत्कृष्ट कहना चाहता है वह प्रधान फल है ।

**लौकिकी सुखदुःखाख्या यथावस्था रसोद्भवा ।**
**दशधा मन्मथावस्था व्यवस्था त्रिविधा मता ॥६॥**

अभिनवभारती

विध्यपाश्रयाद्, धीरोदात्तादिभेदानां नायकानां मध्ये यो यत्र नायको युक्त उचितः तस्य यो विधिः, सम्पाद्यं वस्तु; तदपाश्रयप्रयत्नाद्धेतोः कविफलं प्रधानमिति । यस्मिंश्च विधौ यो नायको युक्तः उचितस्तस्य मयैतत्कर्तव्यमित्यभिसन्धानाभावेऽपि तत्सन्निधौ फलं नायकत्वं विना कथं कर्तव्यम्, यथा तापसवत्सराजे वत्सराजस्य राज्यप्रत्यापत्ति कर्तव्यतायाममात्याभिसंहिता, अत एव ह्यस्यासौ नेता फलस्य चाकृष्टा अमात्य सम्पादिताभिसन्धिप्रत्युपायपरम्पराजितस्यापि ।

नन्वेवमपि रामस्य स्वदारप्रत्यानयनकण्टकोद्धरणभीताभयवितरणादौ सर्वत्र कर्त्तव्यतौचित्यमस्ति, तथापि न व्यवस्थितं लक्षणमित्याह फलस्य चेति । चकारेण

बालक्रीड़ा

(मूल) जैसे लौकिकी सुख दुःख स्वरूपा अवस्थाएं होती हैं उसी प्रकार नाट्य में काम सम्बन्धिनी अवस्थाएँ होती है । इन अवस्थाओं का उद्भव शृङ्गार रस से होता है । ये दश प्रकार की होती है इनकी व्यवस्था तीन प्रकार की है ॥६॥

प्रश्न—कवि जिस फल को उत्कृष्ट कहना चाहता है वह फल प्रधान है ऐसा मानेंगे तो । मनोरथानामगतिर्न विद्यते । ऐसा कोई स्थल नहीं हैं या ऐसा कोई विषय नहीं है जिसमें इच्छा नहीं पहुँच सकती है क्योंकि इच्छा अनियन्त्रित है और यदि वह इच्छा अनियन्त्रित हुई तो फिर वही दोष कवि के प्रयत्न में आयेगा । उत्तर । कवि के प्रयत्न से युक्त समुचित नेताओं की विधि के सहारे से अर्थात् धीरोदात्तादि विभिन्न नेताओं के मध्य में जो नेता जहाँ युक्त है उचित है उसकी विधि है यानी उस नेता के द्वारा सम्पाद्य वस्तु है उसका अपाश्रय करके किये गये कवि के प्रयत्न रूप हेतु से वह फल होता है । जिस विधि में जो नायक युक्त है उचित है उसका मुझे वह अथवा ऐसा करना चाहिए इस तरह के अभिसन्धान के नहीं होने पर भी उस नायक की सन्निधि में फल कवि के लिए अवश्य कर्त्तव्य है । क्योंकि नायकत्व के बिना फल कैसा । जैसे तापसवत्सराज में अमात्य यौगन्धरायण के द्वारा अभिसंहित राज्यप्रत्यापत्ति वत्सराज को अवश्य कर्त्तव्य है । इसीलिए यह उसका नेता है और अमात्य की अभिसन्धि के प्रति किये गये उपाय परम्पराओं से अर्जित फल का आकर्षण करने वाला भी है ।

प्रश्न—इस प्रकार भी राम का अपनी दारा का प्रत्यानयन कण्टक का उद्धार और भीतों को अभय वितरण आदि भी स्थलों में कर्त्तव्यों में औचित्य है तब भी लक्षण व्यवस्थित नहीं हुआ । उत्तर—कहते हैं कि फलस्य च । यहां चकार से समुत्कर्षात् इसकी आवृत्ति द्योतित होती है । इससे इसका यह अर्थ है कि यह जो फल है उस अंश में अधिक उत्कर्ष का अवलम्बन करता है ।

जितना यह फल है उतने ही अंश में वह अधिक उत्कर्ष का अवलम्बन करता है अतः उसी अंश में कवि को उसके औचित्य की कल्पना करनी चाहिए । तथा हि से उस

## अभिनवभारती

समुत्कर्षादित्यस्यावृत्तिर्द्योत्यते। तेनायमर्थः—यदेतत्फलं तावत्यंशे समधिकमुत्कर्षमवलम्बते तत्रैव तस्यौचित्यं कविना कल्पनीयम्। तथा हि—रावणोच्छेदाद्यवधि सीताप्रत्यानयनमेव समुत्कृष्टं भवति, तस्यैव सम्पादनायेतरप्रवृत्तिः। सचिवायत्तसिद्धिस्तु यतो वत्सराजस्ततो यौगन्धरायणाद्यमात्यवर्गस्तावानसाविति तदामात्याद्यभिसंहतिराज्यप्राप्तिफलस्यैव तत्रोत्कर्षः। सह्येवं मन्यते—राज्यभारचिन्ता एतैर्या कृता सा मयैवेति। एवमधिकाधिकहृदयविपरिवर्तननं समुचितं च नायकस्य फलं यद्यदा कवियत्नेन विवक्ष्यते सम्पाद्यतया तदा तस्य प्रधानफलत्वं, रामाभ्युदयादौ सीताप्रत्यानयनादेरिव, न हि तत्राश्वमेधयागादेर्नायकोचितस्य कविविवक्षितत्वमस्ति।

नन्वेमपि कविविवक्षैव पुनरपि प्रधानीभूता तत्र चोक्तो नियमहेत्वभाव इति तत्राह विध्यपाश्रयादिति। यो विधीयत स विधिरिति व्युत्पत्तिः तस्यापाश्रयात्। एतदुक्तं भवति–यादृशि पुरुषार्थे व्युत्पत्तिः कर्त्तव्या तदुचितनायकग्रहणेन कविः प्रवर्तमानो न स्वेच्छया प्रवृत्तो भवतीति। हिशब्देन समुच्चयाभिधायिनैत्सूचितं—विध्यपाश्रयाद्युक्ता ये नेतारस्तेषां यत्फलं तस्योत्कर्षाय कवेः प्रयत्नः ततः फलप्राप्तिः समुत्कर्षावलम्बिनी कल्प्यत इति तात्पर्यम् ॥५॥६॥

## बालक्रीड़ा

फल को बतलाते हैं—रावण के उच्छेद पर्यन्त सीता का प्रत्यावर्त्तन ही समुत्कृष्ट फल है। उसी सीता के प्रत्यावर्तन के सम्पादन के लिए इन फलों के विषय में प्रवृत्ति होती है।

किन्तु वत्सराज तो सचिवायत्तसिद्धि था इसलिए वहाँ पर जब यौगन्धरायण वगैरह उतना वर्ग था तब वहां यौगन्धरायण प्रभृति अमात्य वर्ग के द्वारा अभिसन्धान किया गया राज्यप्राप्तिरूप फल का ही उत्कर्ष होना स्वाभाविक है। वह वत्सराज ऐसा मानता है कि इन अमात्यों ने जो राज्यभार की चिन्ता की है उसे मैंने ही की है। इसलिए अधिकाधिक रूप से हृदय में विपरिवर्त्तमान है और उचित भी है, ऐसा जो नायक का फल जब कवि के द्वारा प्रयत्न से सम्पाद्यत्वेन विवक्षित है तब वह प्रधान फल है; जैसे रामाभ्युदय नाटक में सीता का प्रत्यानयन वगैरह। यहाँ पर अश्वमेधादि याग कर्त्तव्य है जो कि नायक के लिए उचित है तब भी वह कवि को विवक्षित नहीं है।

प्रश्न—यदि इस प्रकार फिर भी कवि की विवक्षा ही प्रधान मानी जायगी जिसमें नियमकारी हेतु के अभाव को कह दिया है तब कैसे संगति होगी, इस पर कहते हैं कि विधि के आधार से हेतु को लाया जायगा। जो विधान किया जाता है वह विधि है ऐसी इसकी व्युत्पत्ति है। उस विधि के अपाश्रय से। यहाँ यह कहा कि जिस प्रकार के पुरुषार्थ के विषय में व्युत्पत्ति करनी है उसी धर्म अर्थ काम एवं मोक्ष रूप पुरुषार्थ के उचित नायक का आलम्बन करके प्रवृत्त होता है न कि कवि अपनी इच्छा से प्रवृत्त होता हैं इति।

यहां मूल पाठ कल्प्यते हि में जो समुच्चय को कहने वाला हि शब्द है उसने यह सूचित किया कि विधान के आश्रयण के अनुसार जो नायक हैं उनके जो फल हैं उनके उत्कर्ष

**संसाध्ये फलयोगे तु व्यापारः कारणस्य यः ।**
**तस्यानुपूर्व्या विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः ॥७॥**
**प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च संभवः ।**
**नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥८॥**
**औत्सुक्यमात्रबन्धस्तु यद्बीजस्य निबध्यते ।**
**महतः फलयोगस्य स फलारम्भ इष्यते ॥९॥**

अभिनवभारती

अथ कविप्रयत्नेन साध्ये व्यापारपरिस्पन्दो यो वाङ्मनसगतरतस्य या अवस्था। आनुपूर्व्येति उद्देशक्रमेणैव प्रयोक्तृभिः कविभिर्निबन्धनीयतया ज्ञातव्याः ॥७॥

ता उद्दिशति प्रारम्भश्चेति। चकारैस्तथाशब्देन चावश्यंभाविक्रमत्वमासा- मुच्यते। न हि प्रेक्षापूर्वकारिणोऽवस्थान्तरासम्भावनायां प्रारम्भ उचितो भवति, तत्प्रारम्भश्चे दुत्तरोत्तरावस्थाप्रसर एव। पञ्चम इत्यनेन क्रमो विवक्षित इति दर्शयति ॥८॥

एताः क्रमेण दर्शयितुमाह औत्सुक्यमात्रबन्धस्त्विति। महतः प्रधानभूतस्य फलस्य प्रयुज्यमानस्य तत्तन्नायकोचितस्य यद् बीजमुपायसम्पत्तस्य यदौत्सुक्यमात्रं तद्विषय।

बालक्रीड़ा

(मूल) संसाध्य फल में जो कारण का व्यापार है उसकी पाँच अवस्थाओं को प्रयोक्ता लोग क्रमशः समझें ॥७॥

(मूल) प्रारम्भ १, प्रयत्न २, प्राप्तिसम्भव ३, नियत फलप्राप्ति ४, और फलयोग ५। ये पाँच अवस्थाओं के नाम हैं ॥८॥

(मूल) बीज की उत्सुकता से सम्बन्धी के रूप में जिसका निबन्धन करते हैं उसको प्राप्तव्य महान् फल का आरम्भ माना है ॥९॥

के लिए जो कवि का प्रयत्न हैं उससे फल की प्राप्ति की कल्पना की जाती है जो समुत्कर्षा वलम्बिनी है। ऐसा तात्पर्य है।५।६।

अब कवि के प्रयत्न से साध्य फल के विषय में जो व्यापार परिस्पन्द मन एवं वाणी में प्राप्त है उसकी जिन अवस्थाओं को आनुपूर्वी से उद्देशक्रम से प्रयोग करने के लिए कवियों को काव्य में निबन्धन करने के लिए ज्ञातव्य हैं उनको कहते है—प्रारम्भश्चेति। यहाँ प्रारम्भश्च इत्यादि में उक्त पाँच चकार और तथा प्राप्तेश्च में उक्त तथा शब्द इन अवस्थाओं के अवश्यं भावी क्रम को कहते हैं कि प्रेक्षापूर्वक कार्य को करने वाले के लिए अन्य अवस्थाओं की सम्भावना को किये विना प्रारम्भ करना उचित नहीं है अगर उसको प्रारम्भ करना है तब उत्तरोत्तर आगे आगे अवस्थाओं का प्रसार करना ही होगा। पञ्चम इससे यह दिखाते है कि यहां क्रम विवक्षित है।७।८।

**अपश्यतःफलप्राप्तिं व्यापारो यः फलं प्रति ।**
**परं चौत्सुक्यगमनं स प्रयत्नः प्रकीर्तितः ॥१०॥**

अभिनवभारती

स्मरणोत्कण्ठानुरूपं, अनेनोपायेनैतत् सिद्धयतीति, तस्य बन्धो हृदये निरूढिः प्रारम्भः, सा च नायकस्यामात्यस्य नायिकायाः प्रतिनायकस्य दैवस्य वा । तस्या हि यथैवानुमानाद् व्यवस्था । दैवसाध्यमपि च समुद्रदत्ताभिमतप्राप्त्यादिकं पुण्योपार्जनं प्रयत्नबहुमानसिद्धये दैवसाहाय्यस्य पुरुषकारस्य फलवर्तिता तद्व्युत्पत्तिलाभाय प्रदर्श्यत इति ॥९॥

एवमपश्यत इति तदुत्पत्त्यव्यतिरेकेण फलप्राप्तिमपश्यतः फलदर्शनमसंभाव्यमानं विवेचयतः फलमुद्दिश्य यो व्यापारः उपायविषयपरमौत्सुक्यगमनलक्षणं तेन विनेदं फलं न भवति तस्मात् स एवोपायोऽन्वेष्यः इत्युपायविषयस्मरणेच्छासन्तानस्वभावः, स प्रयत्नः ॥१०॥

बालक्रीड़ा

(मूल) फल की प्राप्ति को नहीं देखने वाले का, जो फल को प्राप्ति के प्रति व्यापार है, उस व्यापार को प्रयत्न कहते हैं। इसमें फल के लिए अत्यन्त उत्सुकता होती है ॥१०॥

अब इनको क्रम से दिखाने के लिए कहते है कि औत्सुक्यमात्र बन्धस्तु । महान्, प्रधानभूत, प्रयोग के लिए समय से प्राप्त तथा भिन्न २ नायक के उचित जो फल है उसका जो बीज माने उपायसम्पत् है उसका जो औत्सुक्य ऊत्कण्ठा के अनुरूप स्मरण है अर्थात् इस उपाय से यह सिद्ध होता है इत्यादि । उसका बन्ध माने हृदय में निरूढि प्रारम्भ है । वह निरूढि नायक की अमात्य की नायिका की प्रतिनायक की अथवा दैव की है । उसी के अनुगत प्रमाण से उसकी व्यवस्था होती है ।

दैवसाध्य भी जो समुद्रदत्त को अभिमत की प्राप्ति है वह पुण्योपार्जित है । यहां ब्रह्मयशः स्वामी के बनाये हुए पुष्पदूषितक नाटक के छठे अङ्क में समुद्रदत्त का नन्दयन्ती के साथ जो समागम हुआ है उसमें केवल दैव ही सहायक है नीतिरूपी नेत्र के द्वारा किये गये पौरुष का प्रभाव नहीं है । प्रयत्न में बहुमान की सिद्धि के लिए दैव की सहायता से युक्त पुरुषकार में उद्योग में फल की वर्त्तिता प्राप्ति है । अतः उसकी व्युत्पत्ति के लाभ के लिए दिखाया है ॥९॥

एवमपश्यतः । फल के अनुरूप उपाय के विना फलप्राप्ति को देखने, वाले को, फल का दर्शन होना असम्भव है एसी विवेचना करने वाले का जो फल को लक्ष्य करके व्यापार है उपाय के विषय में औत्सुक्य है अर्थात् इस उपाय के विना यह फल नहीं होगा अतः इस उपाय का अन्वेषण करना चाहिए इस प्रकार जो उपाय के बारे में स्मरण करने का और इच्छा सन्तान परम्परा करने का स्वभाव है वह प्रयत्न है ॥१०॥

**ईषत्प्राप्तिर्यदा काचित्फलस्य परिकल्प्यते ।**
**भावमात्रेण तं प्राहुर्विधिज्ञाः प्राप्तिसम्भवम् ॥११॥**
**नियतां तु फलप्राप्तिं यदा भावेन पश्यति ।**
**नियतां तां फलप्राप्तिं सगुणां परिचक्षते ॥१२॥**

अभिनवभारती

ईषत्प्राप्तिरित्यादि । भवत्यस्मादिति भावः उपायः, तस्य सहकार्यन्तरयोगः प्रतिबन्धकवारणं च मात्रपदेनावधारितम् । तदयमर्थः–उपायमात्रेण लब्धेन यदा कदाचिद् विशिष्टफलप्राप्तिरीषत् कल्प्यते संभावनामात्रेण स्थाप्यते न तु निश्चीयते तदा प्राप्तेः सम्भवः । संभावनायोग्यत्वम् संभावनाविशिष्टत्वं नाम तृतीया कर्तुरवस्था ॥११॥

नियतां तु फलप्राप्तिं यदेति । फलस्य प्रकर्षेणाप्तिर्यतः सहकारिवर्गः प्रतिबन्धकविध्वंसनसहितता च सामग्रीरूपतः अपेक्षितौः, तां सामग्रीं, यदा तेन भावेन पूर्वोपात्ततया मुख्योपायेन नियतां नियन्त्रितां फलाव्यभिचारिणीं पश्यति तदा नियतफलप्राप्तिर्नामावस्था। ननु सा किं कर्तरीत्याशङ्क्याह सगुणामिति गौणी उपचरिता तस्येयमवस्था। नियतफलकर्तृविषयत्वेन नियतफलप्राप्तिशब्दो विषयविषयिणोरभेदोपचाराद्

बालक्रीड़ा

(मूल) जब फल की ईषत् प्राप्ति की कल्पना करते हैं, तब विधि के जानकार लोग उसको भावना मात्र से प्राप्ति सम्भव कहते हैं ॥११॥

(मूल) जब भावना के बल से कवि नियत फल प्राप्ति को देखता है तब विधिज्ञ उसको नियत फल प्राप्ति कहते हैं । यह अवस्था गुणों से युक्त होती है ॥१२॥

ईषत्प्राप्तिः । जिससे कार्य होता है वह भाव है उपाय है । उसके लिए दूसरे सहकारी का योग तथा प्रतिबन्धक का वारण है वह सब मात्र पद से अवधारित है । इस लिए इसका यह अर्थ है कि साधारण उपाय के मिलने से जब कभी विशिष्ट फल प्राप्ति की थोड़ी सी कल्पना करते हैं केवल भावना के वल पर स्थापना ही करते हैं न कि निश्चय करते हैं तब फल प्राप्ति की सम्भवना है । वह सम्भावनायोग्यत्वरूपा सम्भावनाविशिष्टत्वरूपा कर्त्ता की तृतीय अवस्था है ॥११॥

जब फल की प्राप्ति नियत है । फल की प्रकर्षण प्राप्ति तभी होती है जब सहकारी वर्ग जुट जाय और प्रतिबन्धकों का विध्वंस हो जाय । प्रतिबन्धक का अत्यन्ताभाव कार्यजनक कारणसामग्री में कारणरूप से निविष्ट है । यहां यतः में यत्र रूप सप्तमी के अर्थ में तसिल् प्रत्यय है । अतः जहां प्रतिबन्धकविध्वंसनसहित सहकारिवर्ग सामग्री रूप से अपेक्षित है । उस सामग्री को जब उस भाव के द्वारा अर्थात् पूर्वोपात्त होने से मुख्य उपाय के द्वारा नियत नियन्त्रित उस फलाव्यभिचारिणी सामग्री को देखता है तब नियतफलप्राप्ति रूप अवस्था होती है ।

**अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम्**
**इतिवृत्ते भवेद्यस्मिन् फलयोगः प्रकीर्तितः ।।१३।।**

अभिनवभारती

युक्त इति यावत् । अत एव पश्यतीत्यनेन दर्शनमेवावस्थेति दर्शितम् । यदि वा सह गुणेन दर्शनेन वर्तते नियतफलप्राप्तिदर्शनं तन्नामावस्थेत्यर्थः । ये त्वकारप्रश्लेषादभावेन नियतां सन्देहमयीमिति व्याचक्षते ते नियता फलप्राप्तिः संदिग्धा चेत् कथमेतद्विरुद्धं संगच्छतामिति प्रष्टव्याः ।।१२।।

अभिप्रेतं समग्रं चेति । यस्मिन्नितिवृत्ते कर्त्रवस्थात्मनि नायकस्याभिप्रेतं तादृशम्, अपि च नानुचितं, अपितु प्रतिरूपमुचितं, संभावात् पूर्णं क्रियाफलमिति समनन्तरफलं, न च विधिफलमिव स्वर्गादि कालान्तरापेक्षि वर्ण्यते, सावस्था नायकस्य फलयोगः फलोत्पत्तिर्नाम । तत्र सचिवामात्यादेरपि यावस्था सा वस्तुतो नायकगामिन्येव भवतीति नाटकेषु नावश्यं सर्वा नाकस्य सक्षादेवोपनिबन्धनीया अपि तु सचिवादिगतत्वेनापि, फलयोगस्तु साक्षादेव तद्गत इत्यभिप्रेतमित्यनेन दर्शितम् । अवस्थान्तराणि सचिवादिगतान्यपि पर्यवस्यन्ति नायकादेरेवेत्येत्तदेव सुकविना रत्नावल्यां " प्रारम्भेऽस्मिन् स्वामिनः सिद्धिहेतौ" (अ० १) इति श्लोकेन प्रतिपदमुक्त्वा अस्मदभिप्रायः समुच्छ्रितेन दर्शितः ।।१३।।

बालक्रीड़ा

(मूल) जिस इतिवृत्त में क्रिया का अपने अनुरूप समग्र सम्पूर्ण इष्ट अभिप्रेत फल होता है उसको फलयोग कहते हैं ।।१३।।

प्रश्न—पश्यति शब्द को कहते हैं अतः क्या यह अवस्था कर्त्ता की होती है । उत्तर । सगुणाम् । गौणी उपचरिता यह फल की अवस्था है । तब पश्यति क्यों कहा इस पर कहते हैं कि नियम से फल को करने वाले के विषय के अनुरोध से यह नियतफलप्राप्ति शब्द विषय एवं विषयी में अभेद मानकर प्रयुक्त है । अर्थात् यहां अभेदोपचार है अतः गौणी लक्षणा है । इसीलिए पश्यति इससे यह दिखाया कि दर्शन ही यह अवस्था है । अथवा दर्शनरूप गुण के साथ रहता है अतः नियतफलप्राप्ति दर्शन उसकी अवस्था है यह उसका अर्थ है । जो तो यहां यदाऽभावेन इसमें अकार का प्रश्लेष करके अभावेन नियतां माने सन्देहमयीम् ऐसी व्याख्या करते हैं उनको पूछना है वे प्रष्टव्य हैं कि जब नियत फलप्राप्ति अनियत है सन्दिग्ध है तब सन्दिग्ध के विरुद्ध संगच्छताम् ऐसा क्यों ।।१२।।

अभिप्रेतं समग्रञ्च । कर्ता के अवस्थारूप जिस इतिवृत्त में जो नायक का अभिप्रेत है इष्ट है । परन्तु इष्ट होता हुआ भी अनुचित नहीं है अपि तु अनुरूप है उचित है और सम्भवतः पूर्ण है । क्रियाफलम् । इसका मतलव है समनन्तर होने वाला तत्काल मिलने वाला फल । न कि विधि यानी याग से कालान्तर में मिलनेवाला स्वर्गादि रूप फल । यह नायक की अवस्था फलयोग फलोत्पत्ति नाम से व्यवहृत होती है । उसमें सचिवादि की जो अवस्था है वह अवस्था भी वस्तुतः नायक में ही होती है । तब भी नाटक में इन सब

**सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभिः ।**
**एतास्त्वनुक्रमेणैव पञ्चावस्था भवन्ति हि ।।१४।।**

अभिनवभारती

ननु मानुषव्याषारे नायकस्य तत्सचिवादेर्वा भवन्त्येता अवस्थाः, प्रतिनायकेऽप्येवं तत्र परमसदुपायापेक्षया । यत्र तु दैवायत्तं फलं वर्ण्यते, तत्र कथं, न च वर्ण्यं पुरुषकारमात्राभिमानिनां दैवमवजानानां चार्वाकादिमतमेयुषां, स देवबहुमानव्युत्पत्तये हि पुरुषकारोऽप्यफलः, तदभावोऽपि सफलः प्रदर्शनीयः. अत एव दरिद्रचारुददत्तादिरूपकाणि तद्विषयाणि । तस्माद्दैवायत्तत्वे कथमेतदवस्थापञ्चकम्, तत्परिहर्तुमाह सर्वस्यैव होति दैवादागच्छतोऽपीत्यर्थः तत्रापि हि यद्यपि नायको न वर्तते तथापि यत्र फलं भवति तत्रावश्यमवस्थादिभिर्भाव्यम् । स एव च परं फलेन तदानीमर्थीभवति' 'यमर्थमधिकृत्य प्रवर्तत' इति हि प्रयोजनलक्षणं वदन्ति । तच्च हि सेवाद्यशेषोपायप्रारम्भं विना न, यत आनन्दसंपादनहृदय एव तत्र प्रवर्त्तते । अपरथा परतः प्राप्तमपि फलं नाङ्गीकुर्यात्, अनङ्गीकरणेऽपि वास्य फलार्थित्वमेवाधिकफलान्तरसन्तोषमनु प्रसिद्धयादिफलान्तराभिसन्धानादिति युक्तमुक्तं मुनिना सर्वस्यैव पञ्चावस्था इति ||१४।।

बालक्रीड़ा

(मूल) फल को चाहने वालों के द्वारा आरम्भ किए गए सम्पूर्ण कार्य की क्रमशः यही पाँच अवस्थाएं होती हैं ।।१४।।

अवस्थाओं का साक्षात् नायक से सम्बन्ध करके उपनिबन्धन नहीं करना चाहिए । अपि तु सचिवादि में भी इन अवस्थाओं का उपनिबन्धन करना चाहिए । किन्तु फलयोग का उपनिबन्धन तो साक्षात् नायक में ही करना चाहिए इस बात को इस चर्चा को अभिप्रेत इस शब्द से दिखाया है। सचिवादि की भी भिन्न-२ अवस्थाएं नायक में ही पर्यवसित होती है इसी तथ्य को सुकवि ने रत्नावली में 'स्वामी की सिद्धि के हेतु का आरम्भ किया' इस श्लोक से प्रतिपद कहकर हमारे अभिप्राय को बड़े जोर से समुच्छ्रित रूप से दिखाया है ।।१३।।

प्रश्न—यह दृश्य काव्य प्रणयन और फिर उनका अभिनयन यह सब मानुष व्यापार है । इस मानुषव्यापार में नायक की अथवा उसके सचिव आदि की ये अवथाएं होती हैं । इसी तरह प्रतिनायक में भी ये अवस्थाएँ होती हैं इन सब में परम सत् उपायों की अपेक्षा है । किन्तु जहां दैवाधीन फल वर्ण्य है वहाँ कैसी अवस्थाएं । क्योंकि केवल पुरुषकार के ही उद्योग के अभिमानी दैव को नहीं जानने वाले चार्वाकमतानुयायी लोगों की इन अवस्थाओं का वर्णन नहीं किया जा सकता है । जहाँ दैव को ही बहुत मानना सिखाया जाता है वहाँ पुरुषकार को उद्योग को अफल और पुरुषकार के अभाव को सफल दिखाना चाहिए । दरिद्रचारुदत्तादि रूपक सब इसी विषय के हैं । इसलिए जहाँ दैवाधीन व्यवस्था है वहाँ ये पाँच अवस्थाएं कैसे होंगी । इसका परिहार करने के लिए कहते हैं सर्वस्यैव । दैव से आते हुए को भी ऐसा इसका अर्थ है । वहाँ पर यद्यपि नायक यत्न नहीं करता

आसां स्वभावभिन्नानां परस्परसमागमात् ।
विन्यास एकभावेन फलहेतुः प्रकीर्तितः ॥१५॥

## अभिनवभारती

नन्वासां तावत् स्वरूपभेदः कालभेदश्च । कालभिन्नानां चैककालत्वाभावात् 'संसाध्ये फलयोगे तु व्यापारः कारणस्य यः' इति (१९-७) यदुक्तं तत् कथम्, यतः फलयोगे साध्ये च तत्रावस्थाः कारणस्य पञ्चेतीहावस्थाः कालभेद एव, न तु ताः कदा चिदन्यथेत्याशङ्कयाह आसां स्वभावभिन्नानामिति स्वभावभेदे तु कालभेदोऽप्युपलक्ष्यते, स्वभावभेदे दिक्कालभेदे च सति दण्डचक्रादिभिरेकफलसंपादना, तेन कालभिन्नानामपि, आसां परस्परमन्योन्यं संगत्या नान्तरीयकत्वेन एकभावे यदागमनं तदवलम्ब्य यो विन्यासो यत्फलहेतुः तत आद्यन्तावकर्षणेन निश्चितोत्तरोत्तरकार्याणां कारणकारणा-

## बालक्रीड़ा

(मूल) अपने अपने भाव अर्थात् क्रिया कलाप के अनुसार भिन्न हुई इन अवस्थाओं का परस्पर के समागम के आधार पर एक भाव से एक रूप से विन्यास है उसे फल हेतु कहते हैं ॥१५॥

है तब भी जहाँ पर फल होता वहाँ पर अवस्थाएं अवश्य होंगी । परं किन्तु उस समय वही वहाँ पर फल का अर्थी होता है क्योंकि 'जिस अर्थ के लिए वह प्रवृत्त होता है वह प्रयोजन है' ऐसा प्रयोजन का लक्षण कहा है । वह प्रयोजन भी सेवादि अशेष उपायों के आरम्भ के बिना नहीं हो सकता है । क्योंकि आनन्द के सम्पादन करने में जिसका हृदय रहेगा वही उपायों के करने में प्रवृत्त होता है । अपरथा जब आनन्द सम्पादनार्थ हृदय में वासना ही नहीं रहेगी तो दूसरे से मिलने वाले फल का भी अङ्गीकार नहीं करेगा । अथवा अङ्गीकार नहीं करने में उसका कदाचित् यह आशय हो कि यह फल अपूर्ण है इससे अधिक फल प्राप्त होगा तभी सन्तोष होगा । क्योंकि देखा गया है कि प्रसिद्धि वगैरह अन्य फलों का अभिसन्धान नायक लोग करते हैं अतः मुनि ने जो कहा है वह सब युक्त ही कहा है कि सभी की पाँच अवस्थायें होती है ॥१४॥

अब यहां यह अशंका होती है कि इन पूर्वनिर्दिष्ट अवस्थाओं मे स्वरूप का भेद और काल का भेद होता है । जब काल भेद मान लिया गया तब एक कालिकता इनमें नही हो सकती है । ऐसी स्थिति में 'संसाध्ये फलयोगे तु व्यापारः कारणस्य यः' यह जो कहा वह कैसे ? क्योंकि यहां साध्य फल में कारण की पांच अवस्थाएं आपने कही है । उनमें पञ्चसंख्यात्व तभी होगा जब भिन्नकालत्व रहेगा अन्यथा नही । इस आशंका के उत्तर में कहते हैं—इन स्वभावतः भिन्न अवस्थाओं का । इति । स्वभावभेद होने पर तो दिग्भेद और काल भेद भी स्वतः प्राप्त है अतः उपलक्षण विधया दिग्भेद और कालभेद भी मान लेना लेना चाहिए । इसी को कहते हैं कि स्वभावभेद दिग्भेद एवं कालभेद रहने पर भी दण्ड चक्र एवं चीवर वगैरह के द्वारा मृत्तिका में घटरूप एकफल की सम्पादना होती है । इससे स्वभावादि के भेदसे

**यद्वृत्तं हि यदाख्यातं पूर्वमेवाधिकारिम् ।**
**तदारम्भादि कर्त्तव्यं फलान्तं च यथा भवेत् ।।१६।।**

अभिनवभारती

नामपि हेतुत्वानपायादिति भावः । यच्चोक्तं फलयोगे कथं फलयोगान्तरमिति तत्राप्याह एकभावेन फलहेतुरिति । एकभावः संबन्धः । तेनायं भावः–फलस्योत्पत्त्यवस्था एका नायकेन सह संबद्धा, द्वितीया येयं संसाध्ये फलयोग इत्यत्र निर्दिष्टा, पूर्वा त्ववस्था मध्यत्रयेण युज्यमाना योग्यफलोत्पत्तिदर्शना पञ्चम्यवस्थेत्यर्थः ।।१५।।

एवमवस्थापञ्चकं प्रदर्श्य तदनुयायित्वेनेतिवृत्तस्याधिकारिकत्वं समर्थयितुमाह यद् वृत्तं हि यदाख्यातमिति । यद्यस्माद्यत् कर्त्तव्यं कार्यं वस्त्वारम्भादि फलान्तं च तदिति तस्मात्तदवस्थानुयायित्वेनाधिकृतत्वादाधिकारिकमुच्यते । चस्तुशब्दस्यार्थे, यथा तु तदितिवृत्तशब्दवाच्यं भवेत् तथा प्राक् सम्यगाख्यातमितिशब्दार्थमिति निरूपणेन 'पञ्चभिः सन्धिभिस्तस्य विभागः, इत्यनेन । एतच्च तद्गतवक्तव्यान्तरोपक्षेपाय पुनरभिहितम् ।।१६।।

बालक्रीड़ा

(मूल) आधिकारिक इतिवृत्त को जिसे पहले ही कह दिया है उस आधिकारिक इतिवृत्त की आरम्भादि अवस्थाओं को इस प्रकार से करना चाहिए जिससे पर्यन्त में फल की प्राप्ति हो जाय ।।१६।।

भिन्न होने वाली भी इन अवस्थाओं की परस्पर में अन्योन्य में सङ्गति से मिलान से नान्तरीयकतया जबरन् जो एकभाव में आगमन है उसका अवलम्बन करके उसके आधार पर जो उन अवस्थाओं का विन्यास है वह फल का हेतु है । इस विन्यास में आदिम तथा अन्तिम अवस्थाओं का अवकर्षण है अतः इस अवकर्षण के बदौलत जिनसे उत्तरोत्तर कार्यों का उत्पन्न होना निश्चित है उन कारणों तथा उन कारणों के भी कारणों में भी हेतुत्व का अनपाय है अर्थात् कारण के भी कारणों से हेतुपना गया नही है मौजूद ही है । यह यहाँ का भाव है ।

और भी जो कहा था कि एक फल के योग में दूसरे फल का योग कैसे । उसमें भी कहते हैं कि एकभाव से फल का हेतु है । यहां एक भाव का अर्थ है सम्बन्ध । अतः यह भाव है—फल की उत्पतिरूपा अवस्था एक है पहली है जिसका नायक के साथ सम्बन्ध है । दूसरी वह है जिसको संसाध्य फलयोग में कही है । इनमें पूर्व अवस्था का मध्य की तीन अवस्थाओं से योग करने पर जिस योग फल की उत्पत्ति दिखाई पड़ती है वह पञ्चमी अवस्था है ।।१५।।

इस तरह पांच अवस्थाओं को दिखाकर अब उन अवस्थाओं के अनुगामी के रूप से इतिवृत्त में आधिकारिकत्व का समर्थन करने के लिए कहते हैं कि यद् वृत्तं हि यदाख्यातम् । यत् यस्मात् यानी क्योंकि आरम्भ से फलपर्यन्त जो वस्तु कर्तव्य है कार्य है इसलिए वह वस्तु

**पूर्णसन्धि च कर्तव्यं हीनसन्ध्यपि वा पुनः ।**
**नियमात् पूर्णसन्धि स्याद्धीनसन्ध्यथ कारणात् ॥१७॥**

अभिनवभारती

ननु किं सर्वत्र पञ्चैव सन्धय इत्याद् पूर्णसन्धि चेति। विकल्पः सर्वत्रेति कश्चिदाशङ्कते तं प्रत्याह नियमादिति। उत्सर्गेणेति केचित्। उपाध्यायास्त्वाहुः- सर्वत्रेतिवृत्तं पञ्चसन्ध्येव, न हि कश्चिदपि व्यापारो प्रारम्भाद्यवस्थापञ्चकं विना सिद्धयेत्; न शक्यमूनीकर्तुं वा। उक्तं च

**सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभिः ।**

**एतास्त्वनुक्रमेणैव पञ्चावस्था भवन्ति हि ॥ इति (१९-१४)**

अवस्थापञ्चकानुयायिना सन्धिपञ्चकेनापि भाव्यमेव, तेन सर्वं नियमात्पञ्चसन्धि, हीनसन्धित्वं तु तत्र कारणादपूर्णाङ्गत्वलक्षणादुच्यते, अत एव पूर्णसन्धीति व्यपदिश्यते इत्यपिशब्देन चोक्तं 'हीनसन्ध्यपि वा पुनः' इति ॥१७॥

बालक्रीड़ा

(मूल) नाटच में पूरी सन्धियों को करना चाहिए। अथवा किसी विशेष प्रसङ्ग से सन्धियों में कमी भी की जा सकती है। उनमें नियम के अनुसार सन्धियां पूर्ण ही होनी चाहिए। सन्धियों में हीनता तो कभी किसी विशेष कारण से होती है ॥१७॥

उन उन अवस्थाओं के अनुयायी के रूप में अधिकृत होने से आधिकारिक कहलाता है। यहां फलान्तं च में उक्त च शब्द तु के अर्थ में है। अतः जैसे तो वह वस्तु इतिवृत्त शब्द से वाच्य है वैसा इतिशब्दार्थम् इस निरूपण के द्वारा पुरस्तात् पहले सम्यक् रूप से कह दिया है। पांच सन्धियों से उसका विभाग है इससे तो उसमें किये जाने वाले वक्तव्यान्तर का उपक्षेप करने के लिए पुनः कहना है ॥१६॥

प्रश्न—क्या सभी जगहों में पांच ही सन्धियां होती है। उत्तर। कहते हैं करनी तो पूरी पाँच संधियां है कहीं पर कम भी की जा सकती है। इस पर कोई आशंका करता है कि तब क्या सभी जगह विकल्प होता है इस आशंका करने वाले को प्रत्युत्तर देते है कि नियमात्। नियमतः तो पाँच ही होती है। कोई नियम की जगह में उत्सर्ग को मानते हैं अतः स्वभाव से पांच अवस्थाओं के विना कार्य सिद्ध नही हो सकता है। अथवा यों कहिए कि ऊनीकरण यानी कम करना शक्य नही है। जैसा कि कहा है—सर्वस्य। पांच अवस्थाओं के अनुरूप पांच सन्धियां भी होनी ही चाहिए इसलिए सब नाटकों में नियम से पांच ही होती है। किन्तु कहीं पर कारण वश कम सन्धियाँ भी हो सकती है ऐसी स्थिति में अङ्गो की पूर्णता नही हो सकेगी। इसका भाव यह है जहां कहीं किसी रूपक में सन्धियों के चौंसठ अंगों में पूर्णता नही हो सकती है वहां पर कम सन्धियां होगी। इसीलिए रूपकों को पूर्णसन्धि वाले कहा जाता है। इस बात को हीनसन्ध्यपि में कहे गये अपि शब्द ने कहा है ॥१७॥

